इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः महतः परमव्यक्तमव्यक्तात्पुरुषः प
रः पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिरित्यादिश्रुतिषु पुरुषस्यैव परत्वप्रतिपादनात् धर्मात्मा सत्यसन्ध
श्च रामो दासरथिर्यदि पौरुषे चाप्रतिद्वन्द्वश्शरैनञ्जहि रावणिमित्यादि वाल्मीकीयवचनात्पुरुषत्वस्य रघुना
थमात्रपर्य्यवसन्नत्वात् श्रुतौ चाव्यक्तशब्देन अव्यक्तं शंकरे विष्णावव्यक्तम्महदादिषु आत्मन्यपि स्या
दव्यक्तमस्फुटे त्वभिधेयवत् इति विश्वकोशाभिधानेन विष्ण्वादीनां ग्रहणात्साकारनिराकारब्रह्माङ्गित्वं र
घुनाथस्य बोधितम् अतएव दृष्ट्वा महर्षयस्सर्वे भोक्तुमैच्छन्सु विग्रहमित्यादि पद्मपुराणादिवचनेन रघु
नाथाभिन्ननित्यवृन्दावननिवासिसङ्कर्षणान्तस्थित श्रीकृष्णस्य शब्दब्रह्म परब्रह्म ममोभे शाश्वती तनू इ
त्याद्युक्तिस्सङ्गच्छते अतएव एते चांशकला पुंसः कृष्णस्तु भगवान्स्वयम् : पुंसो रघुनाथस्यैते शकलाः
कृष्णो नित्यवृन्दावनविहारी तु स्वयं रघुनाथ एवेत्यर्थकस्य सङ्गतिः अतएव देवानां पूरयोध्या तस्यां हिर
एमयः कोश इत्यादिना पर्य्यङ्कविद्याद्युपनिषत्सु तद्धाम्नोपि सर्वपरत्वं व्याख्यातम् अतएव उत्तमः पुरुष
स्त्वन्यः परमात्मेत्युदाहृतः इति गीतावाक्ये अहमित्यपहाय अन्य इति वासुदेवोक्तिस्सङ्गच्छते अतएव
वाल्मीकिना च यस्योक्तं रामोपाख्यानमुत्तमं ब्रह्मणा चोदितन्तच्च शतकोटिप्रविस्तरम् आहृत्य नारदेनैव वा
ल्मीकाय निवेदितमित्यादिवचनैर्ब्रह्मणो रामोपासकत्वम्बोधितम् अतएव शङ्कराचार्य्यरामानुजाचार्य्यमध्वा

चार्य्योशिभिः शिवलक्ष्मणवायुभिः रघुनाथएवाश्रितः अतएव यदद्वैतं ब्रह्मयस्यतनुभाः इत्यादिश्रुतिःसर्वे षामवताराणामवतारीरघूत्तमः रामपादनखज्योत्स्नापरब्रह्मेतिगीयते इत्याद्यगस्त्यसंहितावचनञ्चसङ्गच्छ ते अतएव तस्मिन्साकेतलोकेविधिहरहरिभिःसन्ततंसेव्यमाने दिव्येसिंहासनेस्वेजनकतनयया राघवश्शो भमानः युक्तोमत्स्यैरनेकैः किरिभिरपितथा नारसिंहैरनन्तैःकूर्मैः श्रीनन्दनन्दैः हयगलहरिभिर्नित्य मासोन्मुखैश्च १ यज्ञःकेशववामनौनर वरोनारायणोधर्मजः श्रीकृष्णोहलधृक्तथामधुरिपुः श्रीवासुदेवोपरः एतेनैकविधामहेन्द्रविधयोदुर्गादयःकोटिशः श्रीरामस्यपुरोनिदेशसुमुखानित्यास्तदीये पदे इत्यादीनिबृहद्ब्रह्मसंहितावचनानिसङ्गच्छन्ते अतएव नारायणादिरूपाणिसाकारैश्वर्य्यमुत्तमं नित्यंब्रह्मनिराकारैश्वर्य्यन्नित्यंविभातिचेतिसुन्दरीतन्त्रवचनं नारायणोपिरामांशश्शङ्खचक्रगदाधरः इति वाराहसंहितावचनञ्च अनन्दोद्विविधःप्रोक्तोमूर्त्तश्चामूर्त्तएवच अमूर्त्तस्याश्रयोमूर्त्तःपरमात्मानराकृतिरितिपंचरात्रवचनञ्च ययौतथामहाशम्भूःरामलोकमगोचरम् तत्रगत्वामहाशम्भूराघवन्नित्यविग्रहम् ददर्शपरमात्मानंसमासीनंमयासह सर्वशक्तिकलानाथंद्विभुजंरघुनन्दनं द्विभुजाद्राघवान्नित्यात्सर्वमेतत्प्रवर्त्तते इति सुन्दरीतन्त्रवचनञ्च स्थूलञ्चाष्टभुजंप्रोक्तंसूक्ष्मंचैवचतुर्भुजम् परञ्चद्विभुजंरूपंतस्मादेतत्त्रयंयजेदित्यानन्दसंहितावचनञ्च योवैवसतिगोलोकेद्विभुजस्तुधनुर्धरः सदानन्दमयोरामोयेन

विश्वमिदन्तत मितिसदाशिवसंहितावचनञ्च रमन्तेयोगिनोयस्मिन्नित्यानन्दे चिदात्मनि इतिरामपदेना
सौपरब्रह्माभिधीयते इतिरामोपनिषद्वचनञ्च रामएव परंब्रह्म रामएवपरन्तपः रामएवपरन्तत्वं श्रीरामो
ब्रह्मतारकमिति हनुमदुपनिषद्वचनञ्च आनन्दरूपोनिष्परिणामएषलोकश्चैतस्माद्रमते इतिशाण्डि-
ल्यशाखावचनञ्च ब्रह्मविष्णुमहेशाद्याःयस्यांशाःलोकसाधकाः तंरामंसच्चिदानन्दंनित्यंरामेश्वरम्भजे इति
हनुमत्संहितावचनञ्च भृगुर्वैवारुणिर्वरुणांपितरमुपससार अधीहिभगवोब्रह्मेतिसोब्रवीत् रामएव
परंब्रह्मरामादन्यन्नकिञ्चन यतएतेरामादेवोत्पद्यन्ते रामएवविलीयन्ते रामएवस्थी यन्ते तस्माद्रामएव
विभुरितितैत्तिरीयश्रुतिश्चसङ्गच्छते तद्धामपरत्वप्रतिपादिकाश्रुतिस्तुदेवानांपूरयोध्यातस्यांहिरण्मयः
कोशःस्वर्गोलोकोज्योतिषावृतोयोवैतांब्रह्मणोवेदामृतेनावृतांपुरीं तस्मैब्रह्मचब्रह्माच आयुःकीर्त्तिप्रजांददु
रिति अथयदरण्यायनमित्याचक्षते अरश्चवैण्यश्चार्णवौब्रह्मलोकेतृतीयस्यामितोदिवितदैरंमदीयंसरः
तदश्वत्थसोमसवनः तदपराजितापूर्ब्रह्मणःप्रभुमितंहिरण्मयंतद्यएवैतावरञ्चवैण्यंचार्णवौब्रह्मलोकेब्र-
ह्मचर्य्येणानुविन्दीन्ततेषामेवैषब्रह्मलोकःतेषांसर्वेषुलोकेषुकामचारोभवतीतिच अतएवप्रभोः प्रभुरित्या
दिसङ्गच्छते तत्रापाततोविरुद्धत्वेनप्रतिभासमानानांविष्णुनासदृशोवीर्य्ये विष्णोरर्द्धम्महाभागमित्यादिवच
नानांतत्वनिर्णयाय महापातकनाशकैकवर्णघटितश्रीमद्वाल्मीकीयरामायणंव्याख्यायते श्रुतश्रुतीनांप्राप्तम

हत्सङ्गानां समातिशयरहितनित्यानन्दवस्तुप्राप्तीच्छावतां समातिशयरहितसत्यज्ञानानन्दस्वरूपदेशकालव
स्तुपरिच्छेदशून्यसाकारनिराकारब्रह्मनियन्तृवस्त्वन्वेषणशीलानां अवाङ्मनसगोचरवेदतात्पर्य्यगम्यस
र्वेश्वरेश्वरश्रीरामावबोधाय परमकारुणिकपरमरामरसास्वादनतत्परनारदब्रह्मोपदेशमवगत्य परमकारु
णिकऋषिर्वाल्मीकिर्वेदोपबृंहणभूतं रामाचरितप्रतिपादकं चतुर्विंशतिसहस्रसंख्यात्मकश्लोकात्मकं श्रीम-
द्रामायणं प्रकटयामास तत्र तस्य वेदोपबृंहणत्वं द्योतयितुं वेदकारणीभूतगायत्र्यक्षरं एकैकं प्रतिश्लोकसह-
संक्रमेण प्रथमे प्रथमे श्लोके संस्थापयामास अतएव प्रथमे श्लोके तकारं संघट्टयन्

एतत्पाठस्यैहिकयोग्यफलदातृत्वमप्यस्तीतिबोधयन्नाह पठन्नित्यादिना द्विजो ब्राह्मणः एतद्रामायणं पठन् सन् वागृषभत्वं वाणीश्रेष्ठत्वमीयात् शब्दब्रह्मपारगत्वंप्राप्नुयादित्यर्थः क्षत्रियःपठन् भूमिपतित्वंपृथिवीश्वरत्वमीयात् वणिक्वैश्यः पण्यफलत्वं धनधान्यवृद्धिमीयात् शूद्रोपिपठन्महत्त्वं सर्व्वजनादरणीयत्वमीयात् जनःप्रतिवंधहेतुकब्राह्मणत्वाभाववान् पठन्सन् द्विजस्स्यात् भ्रष्टंस्वद्विजत्वं पुनः प्राप्नुयादित्यर्थः जनःप्रतिवंधहेतुकक्षत्रियत्वाभाववान् पठन् क्षत्रियः

पठन् द्विजो वागृषभत्वमीयात्स्यात् क्षत्रियो भूमिपतित्वमीयात् वणिग्जनः
पण्यफलत्वमीयात् जनश्च शूद्रोपि महत्त्वमीयात् १०० इत्यार्षे श्रीमद्रा
मायणे आदिकाव्ये वाल्मीकीये बालकाण्डे संक्षेपो नाम प्रथमः सर्गः

※ १ ※

स्यात् भ्रष्टंस्वक्षत्रियत्वं पुनः प्राप्नुयादित्यर्थः जनःप्रतिवंधहेतुकवैश्यत्वाभाववान् पठन् वणिकस्यात् भ्रष्टंस्ववैश्यत्वं पुनः प्राप्नुयादित्यर्थः जनः प्रतिवंधहेतुकशूद्रत्वाभाभाववान् पठन् शूद्रः स्यात् भ्रष्टंस्वशूद्रत्वं पुनःप्राप्नुयादित्यर्थः यद्यप्यस्य वेदसंमितत्वेन शूद्रकर्त्तृकपाठो न युज्यते तथापि निषादस्थपत्यधिकरणरीत्या ऋषिवचनप्रमाण्येन शूद्रस्यापि पाठाधिकारसंभवात् १०० ※※※※※

त्रविधिपूर्वकमित्यस्यरामचरितश्रवणपूर्वकमित्यर्थस्यशिष्टैर्व्याख्यातत्वात् चरितंरघुनाथस्यशतकोटिप्रविस्तरं ए कैकमक्षरंपुंसांमहापातकनाशनमित्याद्यपि ९८ पठनफलमुक्त्वापाठनफलमाह एतदित्यादिना रामायणंरामप्रतिपादकं रामप्रापकंवा अतएवायुष्यंध्वंसाप्रतियोगिआयुर्बलहेतुभूतंकिंच आयुष्यंरसिकजनसंसेव्यं एतदाख्यानंप्रबंधंपठन् अध्याप यन् अन्तर्भावितणिजर्थः सपुत्रपौत्रः पुत्रपौत्रसहितस्सगणः मित्रमंत्रिदासादिसहितःनरःप्रेत्य इहलोकात्प्रस्थित्य स्वर्गे

एतदाख्यानमायुष्यंपठन् रामायणंनरः
सपुत्रपौत्रःसगणःप्रेत्यस्वर्गेमहीयते ९९

स्वः स्वर्गेगीयतेनित्यंप्रशस्यते इति स्वर्गस्साकेतलोकस्तत्रमहीयते तत्रत्यैःप्रशस्यतेइत्यर्थः किञ्च महीदेवादिकृतपूजा- विशिष्टः स्वर्गेसाकेतलोके ईयते तत्रत्यैर्जनैः प्राप्यते अत्रार्थेश्रुतिरपि पंचशतान्यप्सरोगणाःप्रधावन्तिशतंमाल्यहस्ताः शतंचूर्णहस्ताः शतमञ्जनहस्ताः इत्यादिकौषीतकीब्राह्मणात् ९९

रितिसूत्रविहिता राज्यं दशसहस्राणि प्राप्य वर्षाणि राघवः दशवर्षसहस्राणि रामो राज्यमकारयदिति वक्ष्यमाणयुद्धकाण्ड
पद्यघटकीभूतदशसहस्रशब्दार्थः दशगुणितानि तानि सहस्राणि त्रिसहस्राणि वर्षाणि येषु तानि त्रयःत्रिंशत्सहस्रवर्षाणीत्य
र्थः अतोन विरोधः एतेनदशवर्षसहस्राणि दशवर्षशतानि चेत्यत्र एकादशसहस्रवर्षाणीत्यर्थो व्याख्यातो भूषणादौ तदुपपत्ति
र्दुरूपपादेति दिक् ९७ इदमिति वेदैस्सम्मितं समाधिकरहितवस्तुबोधकत्वेन प्रामाण्यशंकारहितत्वादिनाच चतुर्वेदसदृ
श अत एव पुण्यं विपुलसत्कर्मलभ्यं अत एव पापघ्नं निखिलदुरितनिवर्त्तकं अत एव पवित्रं पविवत्वज्रवत्त्रायते शत्रुनिवर्त्तक
त्वेन रक्षतीति पवित्रं इदं सर्वश्रुतिप्रसिद्धं रामचरितं प्रकटीभूतरघुनाथाचरितं यः पठेत्सः सर्वपापैः सर्वाणि पापानि भवन्ति ये-

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितं यः पठेद्रामचरितं सर्वपापैः प्रमुच्यते ९८ ❋❋❋

भ्यः तानि दारिद्र्यकामक्रोधादीनि सर्वाणि निखिलानि पापानि गुरुद्रोहादिजन्यानि तानि च तानि चेति एकशेषः तैः प्रमुच्यते सर्व
कालं सकारणपापसंसर्गशून्यो भवतीत्यर्थः वेदैस्सम्मितमित्यनेन वेदश्रवणाद्यधिकारी एव एतत्श्रवणाद्यधिकारीति ध्व
नितम् पवित्रमिति लुप्तोपमया यथा वज्रधारीन्द्रात् अरयो बिभ्यतीति तथैतच्चरितधारिजनादरयो बिभ्यतीत्युपमालंकारः सूचि
तः तेन श्रेयोर्थिभिरिदमेव सेव्यमित्यादेयं वस्तु व्यक्तम् अत्रार्थे श्रुतिरपि ब्रह्महत्यासहस्राणि वीरहत्याशतानि च स्वर्णस्ते
यसुरापी च गुरुतल्पयुतानि च कोटिकोटिसहस्राणि उपपातकजान्यपि सर्वाण्यपि प्रणश्यन्ति रामचन्द्रस्य कीर्त्तनादि-
त्यादि रामोपनिषदि यथाविधिनिषेधौ हि मुक्तं नैवोपसर्पतः तथा न स्पृशतो रामोपासकं विधिपूर्वकमिति स्मृत्यन्तरन्त-

विन्दन्ति सक्रतुः सद्भिः स्मृतो बहुसुवर्णक इत्यादिना प्रसिद्धम् बहुवचनान्तशतशब्देन त्रिशतलाभः कपिंजलाधिक
रणन्यायेन बोध्यः गोदानसंप्रदानीभूतातिरिक्तविप्रेभ्यो धनं दत्त्वेत्यनेन तेषां गोदानग्रहणानपेक्षाव्यञ्जितानेन तेषां पू
र्वप्राप्तगवीपूर्णत्वं व्यक्तम् नेन रघुनाथराज्यकालिकब्राह्मणानां संतोषातिशयस्सूचितः ९४ ९५ ९६ ❋❋❋
दशेति दशवर्षसहस्राणि दशसंख्यागुणितानि वर्षसहस्राणि त्रिसहस्रसंख्यासंख्यातवर्षाणि त्रिंशत्सहस्रवर्षाणीत्यर्थः
दशवर्षशतानि च दशसंख्यागुणितानि वर्षशतानि शतत्रयवर्षाणि सहस्रत्रयवर्षाणीत्यर्थः एवं च त्रयस्त्रिंशत्सहस्रवर्षा

गवां कोट्ययुतं दत्त्वा विद्वद्भ्यो विधिपूर्वकं असंख्येयं धनं दत्त्वा ब्राह्मणेभ्यो महायशाः ९५

राजवंशाञ्छतगुणान् स्थापयिष्यति राघवः चातुर्वर्ण्यं च लोकेऽस्मिन्स्वे स्वे धर्मे नियोक्ष्यति ९६

दशवर्षसहस्राणि दशवर्षशतानि च रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ९७ ❋

णि राज्यं रामो नित्यरमणशीलः उपासित्वा कृत्वेत्यर्थः आब्रह्मलोकं अः विष्णुः आः प्रजापतिः ब्रह्मशिवः तैर्लोक्यते हृदि नि
त्यं स्मर्यते इत्यालोकं किंच ब्रह्माभिन्नं लोकं आनन्दघनं अप्रकटायोध्यापुरं प्रयास्यति अप्रकटतया स्थास्यति बहुवचनान्तस
हस्रशब्देन बहुवचनान्तशतशब्देन च सहस्रत्रयशतत्रयलाभः कपिंजलाधिकरणन्यायेनावगंतव्यः एकसहस्र एकशता
र्थकत्वं तु तत्र नोपपद्यते तयोर्बहुवचनांतत्वात् विंशत्याद्याः सदैकत्वे इत्यनुशासनेनैकशेषमन्तरा बहुवचनान्तत्वस्य दुर्लभ
त्वात् अतएव त्रयोदशाब्दसाहस्रं ब्रह्मचर्यमखंडितमिति भागवतं सानुकूलं शतानि सहस्राणीत्यादौ द्वितीया कालाध्वनो

…तवामैथिलीं मैथलराजमादुर्भूतां सीतां ऋते विना लंकां तदाख्यां पुरीं दग्ध्वा संदृष्ट्वा प्रियं रघुनाथं परमाल्हादजनकीभूत संदेशं आख्यातुं वक्तुं रामाय पुनरयात् गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनीति चतुर्थी प्रियमाख्यातुमित्युक्त्वा सीतारघुनाथवृत्तादन्यत् किंचिन्न हनुमान् स्मरतीति व्यक्तम् च शब्द एवार्थे ७७ रघुनाथप्राप्तिकालिकं हनुमद्वृत्तमाह सोभिगम्येत्यादिना अमेयात्मा अपरिमितधैर्ययत्नादिमान्स हनुमान् महात्मानं परमधैर्य्यवन्तं रामं अभिगम्य सा म्मुख्येन प्राप्य प्रदक्षिणं च कृत्वा विनापिचं समुच्चयः तत्त्वतो वस्तुतः सीता मया दृष्टेति न्यवेदयत् सम्यक् कथयामास प्रद

सोभिगम्य महात्मानं कृत्वा रामं प्रदक्षिणं *
न्यवेदयदमेयात्मा दृष्टा सीतेति तत्वतः ७८

…क्षिणं कृत्वेत्यनेन कथनात्पूर्वं आचरणादपि सीतादर्शनं बोधितमिति व्यञ्जितम् अत्र पूर्वं दृष्टेत्युक्त्वा एतदुच्चारणात्पूर्वं सी… …पदमात्रश्रवणेन तद्विषयकशंसयो मा भूदिति हेतुर्व्यक्तः परमधैर्य्यवंतमित्युक्त्वा क्षणं शमपि वियोगानहीभूत सीतावियो… …यं प्राणान्कथं धारयतीति हनुमत्सन्देहनिवर्त्तको हेतुः सूचितः तेन हनुमतः परमाभिज्ञत्वं सूचितम् तत्त्वत इत्यनेन मायि… …यासीतादर्शनव्यावृत्तिर्बोधिता ७८

 वन्दरकाण्डवृत्तं समाप्य युद्धकाण्डवृत्तमाह् ततइत्यादिभिः ततोहनुमद्वाक्यश्रवणानन्तरं सुग्रीवसहितोरघुनाथःमहोद

 स्समुद्रस्यतीरंगत्वाप्राप्यआदित्यसन्निभैः आदित्यप्रकाशकैश्शरैर्बाणैस्समुद्रं क्षोभयामास आपातालमाकुलीचकारएते

षां बाणव्यापारात्पूर्वं लंकामार्गदानेसमुद्रस्यानवधानतासूचिता ७९ दर्शयामासेतिप्राप्तक्षोभानन्तरंएवानन्तरार्थकः स

रितांपतिस्समुद्रः आत्मानंस्वस्वरूपंदर्शयामासचकारात्त्वापराधक्षमापनहेतुभूतवचनसमुच्चारयामासरामःसमुद्रवचनात्

समुद्रप्रार्थनातःचकारात्स्वाश्रितकल्याणायस्वाचरितसूचनार्थंनलंसेतुंअकारयत् नलेनसेतुंरचयामास नलस्यकर्मत्वंहृक्रो

ततःसुग्रीवसहितोगत्वातीरंमहोदधेः समुद्रंक्षोभयामासशरैरादित्यसन्निभैः ७९

दर्शयामासचात्मानंसमुद्रःसरितांपतिः समुद्रवचनाच्चैवनलंसेतुमकारयत् ८०

तेनगत्वापुरींलंकांहत्वारावणमाहवे रामःसीतामनुप्राप्यपरांव्रीडामुपागमत् ८१

रन्यतरस्यामितिविहितम् स्वाश्रितकल्याणायेत्यनेनरघुनाथस्यपरमदयालुत्वंसूचितम् ८० सेतुबंधनोत्तरकालिकंवृ

त्तमाहतेनेत्यादिनारामः तेनस्वकारितेनसेतुनालंकांपुरींगत्वाप्राप्य आहवेतत्रस्थसंग्रामेरावणंहत्वापरांलक्ष्म्यादिश्रेष्ठांसी

तांअनुप्राप्यसम्यक्स्वीकृत्यव्रीडां इन्द्रादिसाहाय्यकारकरघुकुलोद्भवोवानरसाहाय्येनस्वपरिग्रहंप्राप्तइतिजनावदिष्य

न्तीतिलज्जाभासंउपागमत् प्राप अत्रव्रीडांप्रापेत्युक्त्यारघुनाथस्यपरममर्यादापालकत्वंव्यक्तम्दृश्यतामिति ततोऽनंत

रंजनसंसदिवानरादिसभामध्येतांसीतांरामः परुषंवक्तुमनर्हंवचः उवाच जनसंसदीत्यनेनपरुषोक्तिर्नस्वाभिमेतेतिध्व

तम् सती नित्यं रामानुकूला सालक्ष्म्यादिपरा सीताऽमृष्यमाणाऽन्यप्रत्ययार्थं वचोऽन्यार्थमसहमानाज्ज्वलनं प्राकृत
वन्हितेनजनैः प्रतीयमानं विवेश स्वस्वरूपभूततेजसितस्थौ अत एव सतीत्यनेनाऽमृष्यमाणादित्यस्यनविरुद्धत्वम् ए
तेनसीतारामयोः परमचतुररसिकशिरोमणित्वंध्वनितम् ८२ ततइति ततःज्वलनप्रवेशानन्तरमग्निवचनात् विशु
द्धभावां निष्पापांप्रतिगृह्णीष्व राघवेत्याद्याकारकात् विगतकल्मषांकल्मषसंबन्धशून्यांसीतांज्ञात्वाजनाम्बोधयित्वा
स्वीचकारेतिशेषः महताऽतिप्रशंसनीयेनतेनसर्वप्रतीतिजनकेनमहात्मना सर्वश्रेष्ठस्यराघवस्यकर्मणासदेवर्षिग

तामुवाचततोरामः परुषंजनसंसदि अमृष्यमाणासासीताविवेशज्वलनंसती ८२
ततोग्निवचनात्सीतांज्ञात्वाविगतकल्मषां कर्मणानेनमहतात्रैलोक्यंसचराचरम् ८३
सदेवर्षिगणंतुष्टंराघवस्यमहात्मनः बभौरामःसंप्रहृष्टः पूजितःसर्वदैवतैः ८४

णंदेवर्षिगणसहितं सचराचरंचराचरसहितंत्रैलोक्यंतुष्टंसंतोषंप्राप्तमासीत् अतएवसर्वदैवतैः निखिलसुरैः पूजितः
म तएव संप्रहृष्टः परमहर्षप्राप्तः रामः बभौशुशुभे श्लोकद्वयंसंमिलितान्वयि विगतकल्मषांबोधयित्वेत्यनेनरामस्यलो
वि पवादभीरुत्वंबोधितंतेनरघुनाथेसौशील्यगुणोव्यक्तः सर्वदैवतैः पूजितइत्यनेनयदिसर्वदैवतैः पूजितस्तर्हिमनु
ष्यादिभिः पूजितइतिकिंवक्तव्यमितिकाव्यार्थापत्तिरलंकारोव्यक्तः ज्ञातेत्यत्रान्तर्भावितणिजर्थः ८३ ८४

सिंहावलोकनन्यायेनसीतासमागमनात् पूर्वकालिकंविभीषणराज्याभिषेकंप्रदर्शयन् रघुनाथवृत्तमाह अभिषिच्ये त्यादिनातदासीतासमागमात्पूर्वस्मिन्कालेराक्षसेन्द्रंराक्षसनिष्ठत्वनानिरूपितस्वामिनायोग्यंविभीषणंलंकायामभि षिच्ययथाविधिराज्याभिषेकंकारयित्वाचकारात्विभीषणाकृतसत्कृतिंप्राप्यअतएव कृतकृत्यः कृतंनिष्पादितंकृत्यं कर्त्तव्यंब्रह्मादिप्रार्थनयास्वीकृतंराक्षसनिवर्त्तकत्वादियेनसः अतएवविज्वरः विगतःज्वरःसज्जनसंतापोयस्मात्स

अभिषिच्यचलंकायांराक्षसेन्द्रंविभीषणं कृतकृत्यस्तदारामोविज्वरःप्रमुमोदह ८५

रामः प्रमुमोदप्रमोदमापहइतिविभीषणप्रमोदद्योतकम् अनुदात्तेत्वप्रयुक्तात्मनेपदस्यानित्यत्वात्परस्मैपदम् वोप क्षिणिजटायुषिज्वरः पश्चात्तापोयस्येत्यपिविज्वरशब्दार्थंवर्णयन्तिभूषणकाराः अप्रकृतत्वात्रघुनाथदर्शनजन्यप्राप्त जरुषार्थकत्वेनचशोकानर्हत्वाच्चनतत्व्याख्यातमस्माभिः ८५

देवताभ्यइति सुहृद्वृतः सुग्रीवादिविभीषणादिसहितोरामः देवताभ्यः रघुनाथविजयस्तवनायआगतसुरेभ्यःवरं सुप्तोत्थिताइववानराउत्तिष्ठन्तुइत्यादिरूपंप्राप्यलब्ध्वा अतएव वानरान्समुत्थाप्यदेवतादत्तवरेणयथावत्स्मृत्वा दिविशिष्टान्संबोध्यपुष्पकेणविभीषणसमर्पितकुबेरविमानविशेषेण अयोध्यांप्रस्थितः अयोध्योद्देश्यकसंयोगानुकूलव्यापारवानासइतिशेषः देवताभ्योवरंप्राप्येत्युत्वायः कालकालोगुणीसर्वविद्यः इत्याद्यागमगम्यदेवतादिस्थितिपरमहेतुभूतरघुनाथेनदेवसम्माननंकृतमितिध्वनितम् ८६ भरद्वाजेति सत्यपराक्रमः सत्योध्वंसाप्रतियोगीपरा

देवताभ्योवरंप्राप्यसमुत्थाप्यचवानरान् अयोध्यांप्रस्थितोरामःपुष्पकेणसुहृद्वृतः ८६

भरद्वाजाश्रमङ्गत्वारामस्सत्यपराक्रमः भरतस्यान्तिकेरामोहनुमन्तंव्यसर्ज्जयत् ८७

क्रमोयस्य किञ्च सत्यायोध्यासास्ति आधारत्वेनयेषांतेसत्याअयोध्यावासिनः तान्नित्यंपिपर्तीतिसत्यपरः अत एवनक्रमते अयोध्यांपरित्यज्यनक्वचिद्गच्छतीत्यक्रमः सएवसइतिकर्मधारयः आरामः सर्वाभिरामदातारमः भरद्वाजाश्रमंगत्वाप्राप्यभरतस्यान्तिकेसमीपेहनुमन्तंव्यसर्ज्जयत् स्वागमनबोधनायप्रेषयामासेत्यर्थः ध्वंसाप्रतियोगिपराक्रविशिष्टइत्यनेनसंकेतितस्वागमनावधिदिनमेवभरद्वाजाश्रमगमनदिनमितिध्वनितम् अयोध्यायान्नित्यंस्थितएवसर्वाभिरामदातेत्यनेनपरिच्छिन्नमूर्त्तेरपरिच्छिन्नत्वमपिव्यक्तम् तेनअघटितघटनापटीयश्शक्तिमत्वंरघुनाथस्यव्यक्तिम् भरतस्यान्तिके इत्यनेनभरतविषयकरघुनाथप्रीतेराधिक्यंध्वनितम् रघुनाथमूर्त्तेपरिच्छिन्नापरिच्छिन्नत्वे

प्रमाणम् यएवविग्रहोव्यापीपरिच्छिन्नस्सएवहि अयोध्यायान्निवसतेततःपादन्नगच्छतीतिसदाशिवसंहितावचन ८७
पुनरिति तदाभरद्वाजाश्रमान्निर्गमनसमये सुग्रीवसहितोरघुनाथः तत्प्रसिद्धंपुष्पकं पुनस्समारुह्य आख्यायिकांभरतस्य
तत्प्रबन्धञ्जल्पन् कथयन् तदातस्मिन्नेवदिनेनन्दिग्रामंभरताधिष्ठितायोध्यैकदेशंययौ प्रापसमारुह्येत्यनेनरघुनाथस्य
हर्षातिशयस्सूचितः ८८ नन्दिग्रामेइति अनघःदूरीकृतदेवव्यसनःहितःसर्वलोकप्रियःभ्रातृभिर्भरतादिभिःप्रार्थित
स्सरामः नन्दिग्रामेभरतनिवासस्थानेजटांहित्वासंशोध्यसीतामनुप्राप्यसंश्लिष्य राज्यंपित्राज्ञयाविसृष्टंपुनरवाप्तवान् मा

पुनराख्यायिकाञ्जल्पन्सुग्रीवसहितस्तदा पुष्पकन्तत्समारुह्यनन्दिग्रामंययौतदा ८८
नन्दिग्रामेजटांहित्वाभ्रातृभिस्सहितोनघः रामःसीतामनुप्राप्यराज्यंपुनरवाप्तवान् ८९

प्तःजटाशब्दोभावप्रधानःतत्यागस्यसंशोधनमन्तरेणासम्भवेनसंशोध्येत्यर्थःफलितःजटाव्यक्तिंत्यक्त्वेत्यर्थस्तुनयुक्तः
सच्चिदानन्दात्मकोभगवान्सच्चिदानन्दात्मिकास्यव्यक्तिः आनन्दरूपममृतंयद्विभाति तदाप्रणखादानन्दमेवेत्यादिश्रुति
प्रामाण्येनरघुनाथकेशादीनामानन्दरूपत्वेनस्वरूपानतिरेकत्वात्त्यागायोगात् सीतासंश्लिष्येत्यनेन यावद्वनवासंसीता
रामयोरेवंसंश्लेषोनजातइतिध्वनितम् तेनधैर्यातिशयोध्वनितः ८९ प्रहृष्टेरामराज्येप्रजावृत्तान्तमाहप्रहृष्टेत्यादिभिः
लोकःरामानुशासनकालिकजनःप्रहृष्टमुदितआसीदितिशेषःप्रहृष्टःरोमांचतांप्राप्तःमुदितःतत्कारणीभूतसर्वाभिलषि
तप्राप्तिजनितप्रमोदविशिष्टःसएवसइतिकर्मधारयःअतएवतुष्टःपरमसंतोषंप्राप्तःअतएवपुष्टःपरिपूर्णशरीरसाम

यविशिष्टः अतएव सुधार्मिकः धर्मंचरतीति धार्मिकः धर्मंचरतीति ठक् शोभनश्चासौ धार्मिकश्च सुधार्मिकः धार्मिकत्वे शोभनत्वन्तु सकलधर्मफलभूतरघुनाथसेवनाश्रितत्वेन अतएव निरामयः मानसव्यथारहितः अतएव अरोगः शरीररोगवर्जितः अतएव दुर्भिक्षभयवर्जितः दुर्भिक्षहेतुकभीतिरहितदुर्भिक्षजनकासंतोषादेरभावात्कथंतत् शंकाहेतुकभीतिः स्यादितिभावः हिर्हैतौचो नित्यार्थकः तत्संबन्धः सर्वत्रबोध्यः ९० प्रमोदप्रतिबंधकाभावं विशदयन्नुत्तरकाण्डवृत्तमाह नपुत्रेत्यादिभिः तत्ररामराज्ये केचिदपिपुरुषाः क्वचित्स्वग्रामादावपि पुत्रमरणंप्रीतिविषयीभूतसुतादिवियोगंन

प्रहृष्टमुदितोलोकस्तुष्टः पुष्टस्सुधार्म्मिकः निरामयोह्यरोगश्च दुर्भिक्षभयवर्ज्जितः ९०

नपुत्रमरणङ्केचिद्द्रक्ष्यन्तिपुरुषाः क्वचित् नार्य्यश्चाविधवानित्यम्भविष्यन्तिपतिव्रताः ९१

नचाग्निजम्भयङ्किञ्चिन्नाप्सुमज्जन्तिजन्तवः नवातजम्भयङ्किञ्चिन्नापिज्वरकृतन्तथा ९२

द्रक्ष्यंति ब्राह्मणपुत्रस्य पुनः प्राणसंबन्धान्न तस्य वास्तवं मरणमिति न विरोध इति बोध्यम् नार्य्यः स्त्रियः अविधवाः वैधव्यरहिताः नित्यंपतिव्रताः सर्वकालंस्वस्वपत्यनुकूलवर्त्तिन्यः भविष्यन्ति लङ्कृ(?)पानाद्यतनत्वस्याविवक्षाकौशल्यादिविषये तु न शंकावकाशः तत्पतिवियोगाभावस्य रामराज्यप्रा[ग्]कालिकत्वात् यथानैतासां वास्तवः पतिवियोगस्तथावनयात्रावर्णनसमये वक्ष्यामः ९१ नचेति अग्निजं अग्निहेतुकं किञ्चित् पाकादिसमयेऽङ्गुल्यादिदाहजनितमपिभयंनाभवत् तोयथैजन्तवः अप्सु न मज्जन्ति इदमुपलक्षणं अकालमृत्युप्राप्नुवंत । त्यर्थः वातजं वातुहेतुकं किंचिदाष्ठादिशोषादिजनितमपिभयंनाभवत् नथाज्वरकृतन्देहपीडा

बा· नचेति क्षुद्भयमपितत्र न तथा तस्करभयमपि नएतेन सर्वनियंतृत्वं रघुनाथस्य सूचितम् नगराणि पुराणि राष्ट्राणि ग्रामादीनि च धनधान्ययुतानि सर्वसमृद्धिमन्त्येव भविष्यन्ति द्वितीयश्चकारएवार्थे ९३ अतएव सर्वे तत्कालिकाः जनाः नित्यं यथावत्प्रमुदिताः कृतयुगे प्रथमयुगे पि अतथा तत्कालिकजनाः तथा प्रमोदं नजाम्याइत्यर्थः एतेन कौशल्यादीनां अप्रकटसाकेतस्थः त्वेन दशरथसंयोगसत्वात् नवास्तव वियोग इति ध्वनितम् किञ्च कौशल्यादीनां तत्कालिकवात्सल्यरसमग्नतया शृंगारादिरसविस्मृतिरिति ध्वनितम् महायशाः समाधिकरहितकीर्त्तिविशिष्टः राघवः अश्वमेधशतैः

नचापि क्षुद्भयं तत्र न तस्करभयन्तथा नगराणि च राष्ट्राणि धनधान्ययुतानि च ९३
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ९४

शतत्रयसंख्या विशिष्टाश्वमेधनामकयागैः तथा बहुसुवर्णकैः तन्नामकयागैः इष्ट्वा गवां गोप्रयुतं दशसहस्राधिककोटिसंख्यासंख्येयगवीरित्यर्थः विद्वद्भ्यः ब्रह्मविद्भ्यः विधिपूर्वकं यथाशास्त्रं दत्वा असंख्येयं इयत्तारहितं धनं ब्राह्मणेभ्यो गोदानसम्प्रदानीभूतातिरिक्तविप्रेभ्यो दत्वा किञ्च विद्वद्भ्यो ब्राह्मणेभ्यो विधिपूर्वकं यथाविधि गवां कोट्ययुतं दत्वा असंख्येयं धनञ्च दत्वा यथाविधि प्रदाय राजवंशान् राजोद्भवान् राज्ञो राजभिन्नांश्च शतगुणान् पूर्वापेक्षया अधिकसंपत्तिमतः कृत्वा स्थापयिष्यति अस्मिन् लोके चातुर्वर्ण्यं ब्राह्मणक्षत्रियविट्शूद्रान् स्वे स्वे धर्मे तत्तदुद्देश्य

३ वेदवोधिते कर्मणि नियोक्ष्यति यागविशेषस्य बहुसुवर्णनामकत्वं सुबहूनि सुवर्णानि यत्रोपकरणं हूताः